# सप्तमः सर्गः

स वेश्मजालं बलवान् ददर्श व्यासक्तवैदूर्यसुवर्णजालम्।

यथा महत्प्रावृषि मेघजालं विद्युत्पिनद्धं सविहङ्गजालम्।।5.7.1।।

निवेशनानां विविधाश्च शालाः प्रधानशङ्खायुधचापशालाः।

मनोहराश्चापि पुनर्विशाला ददर्श वेश्माद्रिषु चन्द्रशालाः।।5.7.2।।

गृहाणि नानावसुराजितानि देवासुरैश्चापि सुपूजितानि।

सर्वैश्च दोषैः परिवर्जितानि कपिर्ददर्श स्वबलार्जितानि।।5.7.3।।

तानि प्रयत्नाभिसमाहितानि मयेन साक्षादिव निर्मितानि।

महीतले सर्वगुणोत्तराणि ददर्श लङ्काधिपतेर्गृहाणि।।5.7.4।।

ततो ददर्शोच्छ्रितमेघरूपं मनोहरं काञ्चनचारुरूपम्।

रक्षोऽधिपस्यात्मबलानुरूपं गृहोत्तमं ह्यप्रतिरूपरूपम्।।5.7.5।।

महीतले स्वर्गमिव प्रकीर्णं श्रिया ज्वलन्तं बहुरत्नकीर्णम्।

नानातरूणां कुसुमावकीर्णं गिरेरिवाग्रं रजसावकीर्णम्।।5.7.6।।

नारीप्रवेकैरिव दीप्यमानं तडिद्भिरम्भोधरमर्च्यमानम्।

हंसप्रवेकैरिव वाह्यमानं श्रिया युतं खे सुकृतं विमानम्।।5.7.7।।

यथा नगाग्रं बहुधातुचित्रं यथा नभश्च ग्रहचन्द्रचित्रम्।

ददर्शयुक्तीकृतचारुमेघचित्रं विमानं बहुरत्नचित्रम्।।5.7.8।।

मही कृता पर्वतराजिपूर्णा शैलाः कृता वृक्षवितानपूर्णाः।

वृक्षाः कृताः पुष्पवितानपूर्णाः पुष्पं कृतं केसरपत्रपूर्णम्।।5.7.9।।

कृतानि वेश्मानि च पाण्डुराणि तथा सुपुष्पाण्यपि पुष्कराणि।

पुनश्च पद्मानि सकेसराणि वनानि चित्राणि सरोवराणि ।।5.7.10।।

पुष्पाह्वयं नाम विराजमानं रत्नप्रभाभिश्च विघूर्णमानम्।

वेश्मोत्तमानामपि चोच्चमानं महाकपिस्तत्र महाविमानम्।।5.7.11।।

कृताश्च वैडूर्यमया विहङ्गा रूप्यप्रवालैश्च तथा विहङ्गाः।

चित्राश्च नानावसुभिर्भुजङ्गा जात्यानुरूपास्तुरगाः शुभाङ्गाः।।5.7.12।।

प्रवालजाम्बूनदपुष्पपक्षाः सलीलमावर्जितजिह्मपक्षाः।

कामस्य साक्षादिव भान्ति पक्षाः कृता विहङ्गाः सुमुखाः सुपक्षाः।।5.7.13।।

नियुज्यमानाश्च गजाः सुहस्ताः सकेसराश्चोत्पलपत्रहस्ताः।

बभूव देवी च कृतासुहस्ता लक्ष्मीस्तथा पद्मिनि पद्महस्ता।।5.7.14।।

इतीव तद्गृहमभिगम्य शोभनम् सविस्मयो नगमिव चारुकन्दरम्।

पुनश्च तत्परमसुगन्धि सुन्दरं हिमात्यये नगमिव चारुकन्दरम्।।5.7.15।।

ततः स तां कपिरभिपत्य पूजितां चरन् पुरीं दशमुखबाहुपालिताम्।

अदृश्य तां जनकसुतां सुपूजितां सुदुःखितां पतिगुणवेगनिर्जिताम्।।5.7.16।।

ततस्तदा बहुविधभावितात्मनः कृतात्मनो जनकसुतां सुवर्त्मनः।

अपश्यतोऽभवदतिदुःखितं मनः सचक्षुषः प्रविचरतो महात्मनः।।5.7.17।।

इत्यार्षे वाल्मीकीये श्रीमद्रामायणे आदिकाव्ये सुन्दरकाण्डे सप्तमः सर्गः।।